

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रिमासपत्रिका
सेप्टेम्बर् २०२०
रू.५/-

ब्रह्मोत्सव
विशेष सञ्चिका

२३-०९-२०२०
सौम्यवासरः
रात्रौ-गरुडवाहनम्

तिरुमल श्रीवेङ्कटेश्वरस्वामिनः सालकट्ल ब्रह्मोत्सवः
२०२० सेप्टेम्बर् १९ तः २७ पर्यन्तम्

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्



तिरुमलतिरुपतिदेवस्थानम्

१९-०९-२०२० स्थिरवासरः
प्रातः-ध्वजारोहणम्



१९-०९-२०२० स्थिरवासरः
रात्रौ - महाशेषवाहनम्

२०-०९-२०२० भानुवासरः
प्रातः-लघुशेषवाहनम्





designpsivaprasad

## गीतामृतम्



ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः।।

(भगवद्गीता १४/१)

ततः पश्चात् भगवान् श्रीकृष्णः अर्जुनश्च धवलवर्णैः अश्वैः उह्यमानेन महता रथेन तत्र समागतौ। तौ च युद्धोत्साहवर्धनाय स्वीयौ अलौकिकौ शङ्खौ ध्मातवन्तौ।



# सङ्कीर्तनम्



नमो नारायणाय
नारायणाय सगुणब्रह्मणे सर्व
पारायणाय शोभनमूर्तये नमो ।।नमो।।
नित्याय विबुधसंस्तुत्याय नित्याधि
त्याय मुनिगणप्रत्ययाय
सत्याय प्रत्यक्षाय सन्मानस सां
गत्याय जगदवनकृत्याय ते नमो ।।नमो।।
अक्रमोद्धुतबाहुविक्रमातिक्रान्त
शुक्रशिष्योन्मूलनक्रमाय
शक्रादिगीर्वाण विक्रभयभङ्ग नि
र्वक्राय निहतारिचक्राय ते नमो ।।नमो।।
अक्षरायातिनिरपेक्षाय पुण्डरी
काक्षाय श्रीवत्सलक्षणाय
अक्षीणविज्ञानदक्षयोगीन्द्र सं
रक्षानुकम्पाकटाक्षाय ते नमो ।।नमो।।
करिराजवरदाय कौस्तुभाभरणाय
मुरवैरिणे जगन्मोहनाय
तरुणेन्दुकोटीरतरुणीमनस्तोत्र
परितोषचित्ताय परमायते नमो ।।नमो।।
पात्रदानोत्सवप्रथितवेङ्कटराय
छात्रीशकामितार्थप्रदाय
गोत्रभिन्मणिरुचिरगात्राय रविचन्द्र
नेत्राय शेषाद्रिनिलयाय ते नमो ।।नमो।।

(श्री अन्नमाचार्यस्य संस्कृतसङ्कीर्तनानि)

# नानाविधेषु उत्सवेषु ब्रह्मोत्सवस्य प्रामुख्यम्

श्रीमत्पद्मावतीनाथं
शेषशैलनिकेतनम्।
कलिकल्मषहर्तारं
वन्दे श्रीवेङ्कटेश्वरम्।।

उत्सवप्रियाः खलु मनुष्याः' इति सूक्तिः सुप्रसिद्धा। उत्सवकाले अमन्दानन्दमनुभवन्तो जनाः शतशः, सहस्रशः, लक्षशश्च एकत्र समाविष्टाः विविधान् समुत्साहजनकान् कार्यक्रमान् कुर्वन्ति।

भगवन्तमुदिश्य क्रियमाणाः उत्सवाः दैवकार्यक्रमप्रधाना भवन्ति। शास्त्रेषु निर्दिष्टं विधानं अनुसृत्य ते अनुष्ठीयन्ते। विशिष्य नित्योत्सवनिलये तिरुमलक्षेत्रे विधीयमाना उत्सवाः भक्तान् भगवदनुग्रहेण धन्यान् कुर्वन्ति।

ते उत्सवा तोमालसेवादिनित्योत्सवाः। अष्टदळपादपद्माराधनं इत्यादयो वारोत्सवाः। रोहिणीनक्षत्रादयो नक्षत्रोत्सवाः, ब्रह्मोत्सवादयः संवत्सरोत्सवाः इति अनेकविधाः सन्ति। तेषु ब्रह्मोत्सवानां इतरोत्सवापेक्षया प्रधाान्यं सर्वजनविदितमेव। विष्णुना प्रेरितः ब्रह्मा अमुमुत्सवं आदौ कृतवानिति हेतोः एते उत्सवाः ब्रह्मोत्सवा इत्युच्यन्ते। अथवा साक्षात् परब्रह्मस्वरूपिणं श्रीनिवासमुद्दिश्य क्रियन्ते इति हेतुनापि एतेषामुत्सवानां ब्रह्मोत्सवत्वं सिद्धयति।

महाविष्णुः स्वयंव्यक्तमूर्तिरूपेण कन्यामासे श्रवणनक्षत्रदिने अवततार। तं दिवसं पुरस्कृत्य नवाह्निकरूपेणामुमुत्सवं ब्रह्मा आदौ निर्वर्तितवान्।

न केवलं ब्रह्मा, अनेके राजानोपि कालक्रमेण अमुमुत्सवं कृतवन्तः इति शासनादिप्रमाणैः ज्ञायते। तेषु राजसु पल्लवराज्ञी, विजयगण्डगोपालदेवः, यादवरायः, हरिहररायः, इत्यादयः बहवः सन्ति। गतकाले एते उत्सवाः प्रतिमासं एकैकोत्सवरूपेण प्रचलन्तिस्म इति कथयन्ति। यद्यपि ते उत्सवाः आधुनिककाले न अनुष्ठीयन्ते तथपि ब्रह्मणा प्रारब्धः उत्सवस्तु आगमोक्तप्रकारेण अधुनापि निर्विघ्नम् प्रवर्तते। मृत्संग्रहण अङ्कुरार्पण ध्वजारोहणादिकार्यक्रमैः आरब्धः अयमुत्सवः चक्रस्नानेन समाप्तिं गच्छति। नवसु अपि दिनेषु विविधवाहनेषु श्रीवेङ्कटेश्वरः आलयं परितः गत्वा जनेभ्यः दर्शनभाग्यं ददाति। गरुडोत्सवे रथोत्सवे च लक्षशः जनाः महता संतोषेण प्रवृत्ता भवन्ति। अयं ब्रह्मोत्सवः 'सार्वकामिकः' इति अर्थात् अभिलषित सर्वकामप्रदः इति आगमेषु प्रस्तुतः अस्ति।

अस्मिन् वत्सरे करोना प्रभावात् जनसमर्थं अपनेतुं अलाये एकांततया अयं सालकट्ल ब्रह्मोत्सवः प्रचाल्यते।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०६


## सेप्टेम्बर् - २०२०

श्रीशार्वरि नाम संवत्सरस्य भाद्रपद शुक्ल चतुर्दशी तः आधिक अश्वयुज शुक्ल चतुर्दशि पर्यन्तम् - १९४१



मुखचित्रम् - श्रीस्वामिनः गरुडोत्सव (तिरुमल)
अन्तिमरक्षापुटः - श्री स्वामिनः चक्रस्नानम् (तिरुमल)


गौरवसम्पादकः-
श्री अनिल्कुमार् सिंघाल्, I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रात्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्केटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.



### सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते संपर्क कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-




# ब्रह्मोत्सववैशिष्ट्यम्

- महामहोपाध्याय श्री समुद्राल लक्ष्मणय्य, चरवाणी - ७९९३६६९२१६

ब्रह्मोत्सवे समाराध्य
भक्ता सप्तगिरीश्वरम्।
तस्य देवस्य कृपया
लभन्तां तदनुग्रहम्।।

''जन्तूनां नरजन्म दुर्लभ''मिति महान्तो वदन्ति। कुत इति चेत् युक्तायुक्तविवेकसम्पन्नत्वं मनुजस्यैव सहजं, न तु इतरप्राणिनाम्।

मानवः विवेकी चेत्, धर्मार्थकाममोक्षरूपपुरुषार्थान् प्राप्य स्वजन्म सफलं कर्तुं प्रभवति। तथा कर्तुं तस्य भगवदनुग्रहः आवश्यकः।

तमनुग्रहं प्राप्तुं कर्म-भक्ति-ध्यान-ज्ञान-रूपान् चतुर्विधान् योगानवलम्ब्य मनुजः कृत-कृत्यो भवति। यद्यपि भगवदनुग्रहं लब्धुं चतुर्विधयोगाः अनुष्ठेयाः इति कथ्यते, तथाऽपि तेषु कलिकाले भक्तियोगः सुलभोपायः इत्युच्यते। तदुक्तं गीताचार्येण -

भक्त्यात्वनन्यया शक्यः अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।
(गीता - ११-५४) इति।

भक्तियोगेऽपि नवविधमार्गाः सन्ति।
तदुक्तं भागवते -

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।। इति

आगमशास्त्रेषु भगवतः पर-व्यूह-विभव-अन्तर्यामि अर्चावताराः इति पञ्चविधानि स्वरूपाणि निरूपितानि। तेषु

अर्चावतारः भक्तजनानां अत्यन्तं सुलभो भवति। तमवतार-माराध्य भक्तो मुक्तिं सुलभतया प्राप्तुं शक्नोति।

अर्चावतारमाराधयितुं अनेकाः प्रक्रियाः वैखानसाद्यागमेषु निर्दिष्टास्सन्ति। तासु प्रक्रियासु विविधा भगवत्सेवारूपाः उत्सवाः अन्तर्भवन्ति। तेष्वन्यतमो ब्रह्मोत्सवः।

**उत्सवनिर्वचनम् -**

**उदित्युत्कृष्टवचनः सवो यज्ञ उदाहृतः।**
**तस्मादुत्कृष्टयज्ञत्वात् उत्सवः परिकीर्तितः।।**

इति उत्सवशब्दः ब्रह्मोत्सवादीनां उत्कृष्टयज्ञत्वं कथयति।

''उत्सूते हर्षमित्येष उत्सवः परिकीर्त्यते।'' इत्यपि व्युत्पत्तिः अभिधीयते तस्य शब्दस्य। अर्थात् भक्तजनानां हर्षोत्कर्षजनकः उत्सवः इति। भगवदनुग्रहप्राप्तिद्वारा उत्सवाः भगवद्भक्तानां हर्षातिशयं जनयन्तीति ज्ञेयम्। अत एव उत्सव प्रियाः खलु मनुष्याः इति सूक्तिः लोके प्रसिद्धा बभूव।

**ब्रह्मोत्सवविशिष्टता**

कन्यामासे (भाद्रपदे, आश्वयुजे वा) श्रवणनक्षत्रे यथाऽवभृथः सम्पद्यते तथा ब्रह्मा सकलदेवानां समक्षं सप्तर्षीणां सान्निध्ये नव दिनानि ब्रह्मोत्सवं कृतवानिति पुराणानि कथयन्ति।

''उत्सवं कुरु मे ब्रह्मन् पुण्यं लोक पितामह!'' इति विष्णुना प्रेरितः ब्रह्मा अस्योत्सवस्य कर्ता आसीदिति हेतोः अयं ब्रह्मोत्सव इति कीर्त्यते।

किञ्च ब्रह्मस्वरूपिणं श्रीवेङ्कटेश्वरमुद्दिश्य क्रियमाणः उत्सवः इति कृत्वा अस्य ब्रह्मोत्सवत्वं सिद्ध्यति। अथवा नव ब्रह्माणः उत्सवेऽस्मिन् प्रामुख्यं भजन्तीति हेतोः अस्य ब्रह्मोत्सवत्वं कथयन्ति।

तिरुमलक्षेत्रे नित्यं अनेक उत्सवाः प्रवर्तन्ते। तेषु ब्रह्मोत्सवाः महान्तः उत्सवाः भवन्ति इति ब्रह्मशब्दस्य महत्त्वं भावयन् अमुमुत्सवं **''ब्रह्मोत्सव''** इत्यपि कीर्तयन्ति।

**सार्वकामिकः ब्रह्मोत्सवः**

साधारणतया इतरेषु उत्सवेषु एकैकः उत्सवः एकैकं फलं वितरति। ब्रह्मोत्सवस्तु सार्वकामिक इत्यभिधीयते, अर्थात् ये ये कामाः भक्तैरभिलष्यन्ते, ते सर्वेऽपि ब्रह्मोत्सवेन परिपूर्यन्ते इति हेतोः उत्सवान्तरापेक्षया ब्रह्मोत्सवस्य वैशिष्ट्यं अङ्गीकरणीयं भवति।

अपि च अस्मिनुत्सवे लक्षशः भक्ताः विविधप्रान्तेभ्यः समागत्य भगवद्दर्शनानन्दमनुभवन्ति। सङ्गीत-नाट्य-हरिकथादिकार्यक्रमैः भगवन्तमाराध्य धन्या भवन्ति। भक्तिप्रधानानि पुराणप्रवचनादीन्यपि प्रचलन्ति। तानि श्रुत्वा श्रोतारः अमन्दं आनन्दम् अनुभवन्ति। विविधाभिः पूजाभिः, सेवाभिः आध्यात्मिककार्यक्रमैश्च समेतो ब्रह्मोत्सवः इतरोत्सवापेक्षया वैशिष्ट्यं भजते इत्यत्र न संशयः।।

भारतदेशः आध्यात्मिकविज्ञानसंपन्नः इति परिकीर्त्यते। देशे विद्यमानाः जनाः सर्वेपि आर्षसन्तति संबन्धिनः इति कथ्यन्ते। ऋषयः योगमार्गेण परमात्मनः आराधनं कृत्वा मोक्षं प्राप्य कृतकृत्या बभूवुः। ऋषि परंपरायां समुत्पन्नाः प्रजाः अपि पूर्वसंप्रदायमनुसृत्य अस्मिन् कालेऽपि भगवदाराधनं कुर्वन्ति। तस्मिन् आराधन क्रमे अयं ब्रह्मोत्सवः नितरां आदरणीयो भवति। सोऽयं संप्रदायः भारतदेशे सर्वत्र प्रचलति। यद्यपि तिरुमल क्षेत्रे श्री वेङ्कटेश्वरमुद्धिश्य ब्रह्मोत्सवः प्रवर्तते तथापि विविधेषु क्षेत्रेषु विविधाः देवताः उद्दिश्य संप्रदायानुसारेण तत्र एतादृशाः ब्रह्मोत्सवादयः अनुष्ठीयन्ते। परन्तु तिरुमलक्षेत्रे प्रवर्तमानः ब्रह्मोत्सवः इतरोत्सवापेक्षया कमपि अनिर्वचनीयम् आनन्दम् जनयति। तत्र किं कारणमिति चेत् पुराणेषु तिरुमल क्षेत्रस्य प्रभावातिशयः महता संरम्भेण वर्णितः दृश्यते तथाहि

*वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो न भूतो न भविष्यति ।।*

अनेन प्रकारेण द्वादश पुराणानि तिरुमलक्षेत्रस्य प्रभावातिशयं परिकीर्तयन्ति। ततश्च तस्य वेङ्कटेश्वरस्य क्षेत्रे क्रियमाणः ब्रह्मोत्सवः क्षेत्र वैशिष्ट्यंयमनुसृत्य स्वस्यापि वैशिष्ट्यं प्रकटयति।

**विविधविषयलग्नान् वीक्ष्य संसारमग्नान्**
**समुदितकरुणस्तत्पालने दत्तदृष्टिः।**
**इह जगति वृषद्रेरीश्वरत्वेन योऽसौ**
**प्रकटितनिजमूर्तिर्भाति पायात्सविष्णुः।।**





# पुष्करिणी माध्यमेन निष्यन्दमाना स्पतगिरीशस्य दया

- डा.पो.प्र.वें.दु.नागत्रिशूलपाणिः, चरवाणी -९४४०००६४३९

कलियुगेऽस्मिन् प्रत्यक्षदेवो भवति सप्तगिरीशाधिपतिः श्रीनिवासः। यः त्रिकरणशुध्या अनन्तनाम्नः स्वामिनः एकमपि नाम वदति अर्थात् स्वामिनं आह्वयति सः सत्वरं कष्टदूरो भवति। तादृश दयावान् भवत्येष वेङ्कटेशः। आपन्नानां बन्धुः एष देवदेवः स्मरणमात्रेणैव सम्मुखीभूय अस्मान्सर्वान् तारयति। सर्वेभ्यः इष्टकाम्यार्थान् ददाति। पितेव लालयति, पोषयति च। एवं भगवतः दया विलसत्यस्मिन् भुवने।

अथ का नाम दया इति शङ्कायां 'दया सर्वसुखैषित्वम्'' इति वदति युधिष्ठिरः महाभारतीय यक्षप्रश्नेषु। सर्वेऽपि सुखिनस्सन्तु, मा कश्चिद्दुःख भाग्भवेदिति इच्छा, तदनुगुण वर्तनं च दया भवति। अत्र पण्डिताः पुनः दो अवखण्डने या प्रापणे इति धातुद्वय मनुसृत्य दयापदस्य विशेषार्थं प्रबृवन्ति। ततः दश्च या च दये, दयाभ्यां निधिः दयानिधिः इति भवति। दर्शनमात्रेणैव स्वामी वेङ्कटेशः पापान् खण्डयति अर्थात् पापसंहारको भवति तथा इष्टकाम्यार्थश्च भवतीत्यस्य देवदेवोत्तमस्य दयावैशिष्ट्यम्। दा धातोः प्रदानरूपार्थः स्वीक्रियते चेत् एष शैलेशः भक्तेभ्यः वाञ्छितार्थदो भूत्वा अन्ते तान् सद्गतिं प्रापयतीति च अस्य ब्रह्माण्डनायकस्य सर्वोत्तमा दया।

आश्रितपारिजातः श्रीनिवासः स्वयं शेषाद्रौ दयान्वितो तिष्ठति। अत्र आगतेभ्यः भक्तेभ्यः स्वीयां दयां वितरति। किन्तु कर्मणानेन अनधिगता तृप्तिमान् स्वामी इतोऽपि किञ्चित्कर्तु अधिकां दयां प्रसारयितुं च निश्चित्य स्वस्वमीपे पुष्करिणीं स्थापितवान्। पुष्करिणी माध्यमेन स्वीयां दयां वर्धयितुं एषः विशालाक्षः चिन्तितवान्।


सरस्वातीतीर्थम्


यमतीर्थम्

जले वस्तुतः दैवशक्तिरस्त्येव। आप एव ससर्जादौ तासु वीर्यमपाशृणोत् इति स्मृति वचन मनुसृत्य जले भगवान् स्वीयां शक्तिं निक्षिप्तवानिति ज्ञायते। तथाऽपि अस्मिन् पुष्करिणी जले इतोऽपि अधिकं वैशिष्ट्यं शक्तिं च स्थापितवान् गोविन्दः। अथ अस्याः वैशिष्ट्यं जानीमः।

वैकुण्ठे विराजमानां विरजानदीमेव आनीय पुष्कररूपेण स्थापितवान् स्वामिसेवकः वैनतेयः इति पुष्करिण्याः एकं वैशिष्ट्यम्। अत एव स्वामिपुष्करिणी तटे रमया रमाणो भवति वेङ्कटेशः इति देवदेवं स्तौति मङ्गला शासनम्। विशेषतः अस्याः दिशाः सर्वाः क्रमेण तीर्थ विशेषैः संयुतास्सन्तीति ब्रह्मपुराणेक्तिः तथा हि पूर्वे मार्कण्डेयतीर्थं, आग्नेये अग्नितीर्थं, दक्षिणेयमतीर्थं, नैऋत्यां वशिष्टतीर्थं, पश्चिमे वरुणतीर्थं, वायव्ये वायुतीर्थं, उत्तरे धनन्दतीर्थं, ईशान्ये गालवतीर्थं, मध्ये सरस्वती तीर्थमिति नवतीर्थ समन्विता भवति पुष्करिणी। अर्थात् पञ्चदिक्पालाः तथा त्रयः विशिष्ठाः ऋषयः च स्वीयां शक्तिं तीर्थरूपेण उपस्थापितवन्तः पुष्करिण्यामिति अस्याः वैशिष्ट्यम्। धनुर्मासे सिते पक्षे द्वादश्यां अरुणोदये सर्वतीर्थानि स्वामिपुष्करिणी जले आयान्ति इति, षट्षष्टिकोटि तीर्थानां समागमोऽत्र भवतीति वराहपुराणं वदति। शेषाचलेऽस्मिन् पुष्करिण्यासह प्रियङ्गंगा, पापविनाश, पाण्डु, कुमारधारा, तुंबा, कृष्णाख्यानि यानि मुक्तिदानि तीर्थानि सन्ति तेषु स्वामि पुष्करिणी विशिष्टतमा इति ब्रह्मपुराणोक्तिः। एवं भगवतः संकल्प कारणेनैव पुष्करिणी विशिष्टतामत्ता तथा महर्षयः अन्ये विदुषाश्च पुष्करिण्याः


कुमारधारतीर्थम्


तुम्बुरुतीर्थम्



भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः।

वैशिष्ट्यं सुस्पष्टमुक्तवन्तः। अमुं ज्ञात्वा मानवाः भक्तिश्रद्धाभ्यां पुष्करिणीं प्राप्य स्नानेन इष्टसिद्धिं प्राप्नयुरिति देवदेवस्य दयापूर्णचिन्तनम्।

अथ स्वामिनः दया विशेष समन्विता। एषा पुष्करिणी स्वयं शक्तिमती भूत्वा स्नानमात्रेणैव अर्थिनः तारयितुं समर्था। बभूव। अत एव धर्मार्थकाममोक्षाणां यं यं इच्छति तं तं सद्यः प्राप्नोति नरः अस्यां निमज्जनादिति स्कान्दे पुष्करिणी वर्णिता। अस्यां ये स्नान्ति मनुजाः ते धन्याः पुण्यवर्धनाः इति भविष्योत्तरपुराणं वदति। पद्मपुराणे पञ्चाशन्महर्षयः पुष्करिणीं बहुधा प्रशशंसुः। हरिविरिंचि प्रभृतयः श्रेष्ठाः देवाः। सनन्दनाद्याः ऋषयश्च पुष्करिणीस्नानेन निर्मलाङ्गाः कर्मण्य भिरताः भवन्ति इति सुप्रभातोक्तिः। वामनपुराणं मार्कण्डेयवृत्तान्तमेकं वर्णयति। पुरा महर्षिः मार्कण्डेयः समस्त तीर्थ यात्रा फलमाकांक्ष्य तपः अकरोत्। तस्मिन्समये ब्रह्मासम्मुखीभूय स्वामिपुष्करिण्याः स्नानं सर्वतीर्थ स्नानजं फलं ददातीत्युक्तवान्। एवं स ऋषिः पुष्करिणीमागत्य स्नात्वा सर्वतीर्थस्नानजं फलमवाप। अपि च चन्द्रवंश्य नृपः धर्मगुप्तः शप्तं उन्मत्तदशायां स्थितं नन्द नामकं स्वीयं पुत्रं अत्र आनीय स्नानमकारयत्। अनेन स्वस्थो भूत्वा नन्दः बहुकालं राज्यं शशासेति स्कान्दपुराणामपि पुष्करिण्याः दयां अवर्णयत्। एवमेषा पुष्करिणी सर्वेभ्यः अभीष्टदा भवतीत्यत्र स्वामिनः दयान्तरङ्गत्वमेव कारणं भवति परोक्षेण।

अस्याः पुष्करिण्याः दया पराकाष्टतां गता। अतः भक्त्या अस्याः जलं सुलुभत्रयं यः पिबति तस्य पापं एषा विनाशयति इति कण्वमहर्षिः वदति पद्मपुराणे। एवमेव न। अन्येषु तोयेषु स्वामिपुष्करिणी स्मरन् ये स्नानं कुर्वन्ति तेभ्योऽपि वांछितं ददात्येषा पुष्करिणीति जाबालिमहर्षैर्वचनम्। प्रातरुत्थाय आहितात्मानः ये स्वामिपुष्करिणीं कीर्तयन्ति ते परमं पदं यान्ति इति भारद्वाजः पुष्करिण्याः असीमां दयां वर्णयति पद्मपुराणे। एवं ये स्वामितीर्थं प्रशसन्ति, कथयन्ति ते नरकात् प्रमुच्यन्ते इति पुष्करिण्याः दया।

एषः श्रियःपतिः स्वामिपुष्करिणी स्नानार्थमागतान् दीनान् दृष्ट्वा अपरिमित वत्सलतायाः कारणात् साक्षात् आगत्य वाञ्छितं ददातीत्यत्र शंखणस्य कथा प्रमाणं भवति। शंखणो नाम राजा पित्रा दत्तं सांकाश्य राज्यं पालयति स्म। एकदा तस्य सामन्तराजा नः तथा बन्धवश्च मिलित्वा तस्य राज्यं आक्रम्य तं बहिः प्रेषयामासुः। राज्यभ्रष्टः सः शंखणः इतस्वतः भ्रमन् तीर्थयात्रां च कुर्वन् सुवर्णमुरवरी तीरे अशरीरवाण्या बोधितः स्वामिपुष्करिणीं प्राप्य षण्मास पर्यन्तं भक्त्या पुष्करिणी स्नानं स्वामिदर्शनं च कुर्वन् तत्रैव न्यवसत। अमुं दृष्ट्वा दयाकरः स्वामी सम्मुखमागत्य ''इतः परं त्वं राज्यं प्राप्स्यसि, सुखेन जीविष्यसीति च वरं दत्वा अदृश्योऽभवत्। एवं स्वामिनः कृपां प्राप्य सः शंखणः यदा स्वीयं नगरमागतवान् तदा परस्परमात्सर्येण कलहं आप्ताः सर्वे राजानः शंखनसमीपमागत्य तं चक्रवर्तिनं अकार्षुः। एवं स्वामिनः दयां प्राप्य सः राज्यमलभत्वा, सुखेन चिरमुवास च। अतएव उच्यते अष्टोत्तरशतनामसु शंखराजन्य नेत विषयाय नमः इति।

श्रियःपतिः तीर्थ स्वामि सरस्नात मनुजा अभीष्टदायीति प्रस्तुतः। एषः कृपाजलनिधः। आश्रित पारिजातः। दयामृतस्य तरंगैरिव शीतलैरपाङ्गैः एष देवदेवः विश्वं सिञ्चति। तादृशीं दयामाप्तुं तदायत्त चित्ताः भवामः। पुष्करिणीस्नानं कुर्मः। भक्ति श्रद्धाभ्यां सद्वर्तनेन च स्वामिनं सप्तगिरीशमाराध्य तस्य असीमया दयया परं स्थानं प्राप्नुमः।





तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्



२०-०९-२०२० भानुवासरः
रात्रौ - हंसवाहनम्

२१-०९-२०२० इन्दुवासरः
प्रातः - सिंहवाहनम्





२१-०९-२०२० इन्दुवासरः
रात्रौ - मौक्तिकमण्डपम्

२२-०९-२०२० भौम्यवासरः
प्रातः-कल्पवृक्षवाहनम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्



तिरुमलतिरुपतिदेवस्थानम्





२२-०९-२०२० भौम्यवासरः
रात्रौ - सर्वभूपालवाहनम्



२३-०९-२०२० सौम्यवासरः
प्रातः - आन्दोलिकायां मोहिन्यवतारः





designpsivaprasad

तिरुमलतिरुपतिदेवस्थानम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्

२४-०९-२०२० बृहस्पतिवासरः
प्रातः - हनुमद्वाहनम्





२४-०९-२०२० बृहस्पतिवासरः
रात्रौ - गजवाहनम्



designpsivaprasad

तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्







२५-०९-२०२० भृगुवासरः
प्रातः-सुर्यप्रभवाहनम्



२५-०९-२०२० भृगुवासरः
रात्रौ - चन्द्रप्रभवाहनम्





designpsivaprasad



## सालकट्ल ब्रह्मोत्सवः विशेष

# प्रसादनिवेदनम्

- डा.सि. आदिलक्ष्मी
चरवाणी - ९४४०२८५९८५



उपनिषदः पाञ्चरात्रशास्त्राण्यपि परं ब्रह्म निखिल जगदुदयविभवलयलीलमेकमद्वितीयमपरिच्छिन्नं ज्ञानानन्दैकस्वरूपं समामनन्ति। परं तु भगवान् वासुदेवः श्रीमान्नारायण एव परं ब्रह्मेति सुस्पष्टं प्रथयन्ति। पख्यूहविभवार्चारूपेण भगवतश्चातरूप्यं लक्ष्मीतन्त्रे प्रतिपादितम्। वेङ्कटेश्वरः अर्चावतारः अर्चा च योगिनां चित्तालम्बनसौकर्याय तैर्यथारुचि परिगृहीतः सुवर्णरजतादिनिर्मितः प्रतिमाविशेषः। तत्र च मन्त्रविशेषमहिम्ना भगवान् संनिहितो भवति। भगवत्संनिधानेन च तः प्रतिमा अप्राकृताः षाड्गुण्यपरिपूर्णा भगवन्मया भवन्तीति पाञ्चरात्रसिद्धान्तः। कलियुगे नामस्मरणैव मोक्षं भवति। 'कलौ वेङ्कटनायकः' इति पुराणवचनानुसारं कलौ वेङ्कटेश्वर समो देवः नास्ति। न भविष्यति। ब्रह्माण्डनायकस्य ब्रह्मोत्सवं तिरुमलक्षेत्रे अङ्गरङ्गवैभवेन निर्वहन्ति। तत्र वराहपुराणे वेङ्कटाचलमाहात्म्यं ब्रह्मोत्सवं प्रथमं ब्रह्मणाचरितवानिति स्फुटीकरोति।

**उक्तं च वराहपुराणे -**

वर्षे वर्षे तु मासेऽस्मिन् कन्याराशिं गते रवौ कन्याराशौ वर्षे वर्षे ब्रह्मदेवः महोत्सवं निर्वहितुं प्रार्थितवान्।

ब्रह्मा च वेङ्कटेशस्य दिनोत्सवदिनेषु वै
नैवेद्यं बहुधा चक्रे घृतसूपगुणोत्तरम्
गुडान्नं पायसान्नञ्च मुद्गान्नञ्च तिलोदनम्।
शाल्यन्नं कृसरान्नञ्च मरीच्यन्नं तथैव च।
गोदूमान्नञ्च माषान्नं मधुरान्नं घृतोत्तमम्
एवं बहुविधान्नं च फलानि विविधानि च

सालकट्लब्रह्मोत्सवं नवरात्रिषु तिरुमलक्षेत्रे अत्यन्त वैभवेन निर्वहणं भवति। तत्र नवरात्रिषु मलयप्पः

"उच्चैश्रवसमश्वञ्च गजमैरावतं तथा
अनन्तं नागराजञ्च गरुडञ्च त्रयीमयम्।"

प्रतिदिनं एकैकं वाहनमधिरुह्य शोभायात्रां करोति। तुरगवाहनं, गजवाहनं, गरुडवाहनं, शेषवाहनमित्यादि वाहनशोभायात्रामसमये मलयप्पः कृते विशेषप्रसादनिवेदनं भवति। तद्विवरणं वराहपुराणे वर्णितमस्ति। गुडान्नं पायसान्नं, मुद्गान्नं, तिलोदनं, शाल्यन्नं, कृसरान्नं, मरीच्यन्नं, गोदूमान्नं, माषान्नं, मधुरान्नं एवं बहुविधान्नं, घृत्तेनपक्वीय स्वामिनः निवेदयिष्यन्ति अर्चकाः।

व्यञ्जनानि विचित्राणि मनस्तोषकराणि च
दिव्यान्यमृतकल्पानि सुस्वादुरसवन्ति च


उपेन्द्रो वामनः प्रांशुः अमोघः शुचिरूर्जितः।



प्रथमसालकट्लब्रह्मोत्सवे ब्रह्मदेवः विचित्राणि, मनोरञ्जकाणि, मनोहराणि, अमृतोपमानाणि, स्वादु, रुचिकरपदार्थानि निवेदितवान्।अतः तदेवानुसृत्य वैखानशागमप्रकारेण तिरुमलक्षेत्रे मलयप्पस्वामिनः विशेषान्ननिवेदनं भवति। सालकट्लब्रह्मोत्सवफलमपि मलयप्पः स्वयं वराहपुराणे इत्थं वर्णयति -

'ये केचिदत्रकुर्वन्तिब्रह्मक्लप्तोत्सवं मम
ते यान्ति ब्रह्मणो लोकं भूमौ कामानवाप्य च
इममुत्सवमुद्दिश्य सेवार्थं यस्तु वासतः

ब्रह्माणा निर्वहणोत्सवविशेषेणसन्तुष्टः श्रीनिवासः कथयति ''सूर्यः कन्याराशिं गते प्रतिवर्षं मम ब्रह्मोत्सवं ये निर्वहन्ति, तेऽस्मिन् लोक सकलभोगाननुभूय ब्रह्मलोकं यान्ति। ब्रह्मोत्सवं दर्शितुं ये स्वगृहतः स्वनिवासस्थानतः वेङ्कटाचलं गन्तुं पदमेकं स्थाप्यतेऽपि ममपरमपदभाग्यं प्रदानफलत्वेन प्राप्नुवन्ति। राजानः सेवित्वा स्नेहभावेन ते इच्छानुसारं उपायनानि दास्यन्ति। उत्सवकाले प्रासदं ये मानवाः कुर्वन्ति ते अत्रानेकभोगाननुभूय मध्ये स्वर्गलोकसुखं प्राप्याऽन्ते ममपरमपदं आयान्ति। उत्सवकाले अन्नदानं परमश्रेष्ठदानं भवति। ये दातारः तेषास्सह सप्ततरीयाः अन्नसुखं अनुभवन्ति।

**प्रत्यहं मम नैवेद्यं यावत्पत्रस्थचतुष्टयम्**
**सव्यञ्जनं कल्पयन्ति ते हि पुण्यतमा भुवि।**
**ब्रह्मेन्द्रलोकप्रमुखाः तैः सुखेनजिता नरैः**
**तदीयदर्शनात्पंशो भवन्ति महिमादयः।।**

**तेषामैश्वर्यसम्पत्तौ वक्तव्यं नावष्यिते।**
**अन्ते यान्ति परं धाम पुनरावृतिवर्णितम्।।**

प्रतिदिनं चत्वारिकुम्भानि नैवेद्यतया व्यञ्जनानि अवलेहाः मधुरपदार्थैस्सह ये अर्पयन्ति ते ब्रह्मलोकं जयन्ति। तादृशानां मानवानां दर्शनमात्रेनैव पुरुषाणां महिमादिसिद्धयः लभन्ति। पुनः तादृशानां ऐश्वर्यसिद्धिः वर्णितुं न शक्यम्। पुनारावृत्तिरहितमोक्षमपि प्राप्नुवन्ति। शास्त्रेषुकथितदानानि ब्रह्मोत्सवसमये ये कुर्वन्ति ते ऐहिकामुष्मिकस्वर्गसुखं प्राप्नुवन्ति। दानदातृणां क्षेत्रनिवासफलं, ममसायुज्यंमवश्यं लभन्ते। ब्रह्मोत्सवप्रथमदिनादारभ्य सप्तमदिनपर्यन्तं रात्रौ उत्सवपरिसमाप्तिकाले तिरुमलरायमण्डपे अर्चकाः मलयप्पस्वामिनः 'लड्डुपडि', 'अपूपपडि', 'दोशपडि', वगपडि निवेदयन्ति। अलयिदा श्रेण्यानुसारं अर्चकाः आचार्यपुरुषाः, अन्याः कैकर्यपराः उपायनतया स्वीकुर्वन्ति। पञ्चमदिनेनिर्वह्यमाणगरुडसेवात्यन्तं प्रामुख्यं भजति। गरुडासीनः मलयप्पः तिरुवीथिषु विहरणसमये वाहनमण्डपागमनकाले कुम्भनीराजनानन्तरं इहलदोशपडिनिवेदनं भवति। पुनः मलयप्पस्वामिनः सोलबाबत्तू अपूपनिवेदनं, दोशपडि एवमेव तिरुलरायमण्डपे सिंहासनाधिष्ठितस्य राजोपचारैः कैंकर्य्यं कृत्वा लड्डूपडि, अपूपपडि, दोशपडि, आपपडिश्च निवेदयन्ति। नवमदिने चक्रस्नानं भवति। तत्र चक्रस्वामिनं तिरुमञ्जनेन स्नापयित्वा फलनिवेदनं भवति। तस्मिन्सन्दर्भे चूर्णाभिषेकं, तैलसमर्पणं मलयप्पस्वामिनः कृते निवेदयित्वा शेषं चक्रस्वामिनः कृते प्रदास्यन्ति ब्रह्मोत्सवेषु प्रथमदिनतः अष्टमदिनपर्यन्तं यत् परिमाणे 'इहल्दोशपडि' भाष्यकारसन्निधौ निवेदयिष्यन्ति तथैव अवरोहणोत्सवेऽपि निवेदनीयमिति शास्त्रवचनानुसारं निर्वष्यिन्ति अर्चकाः। ध्वजारोहणसमये वैखानशागमरीत्या मुद्गौदननिवेदनं तिरुमलरायमण्डपे मलयप्पस्वामिनः चतुर्षुपात्रेषुमुद्गौदनेनस्साकं शर्करानिवेदनं च भवति।

एवं ब्रह्मोत्सवसमये मलयप्पस्वामिनः विशेषप्रसादनिवेदनं भवति। भक्ताः ब्रह्मोत्सवं दृष्ट्वा प्रसादं स्वीकृत्य ऐहिकामुष्मिकसुखं प्राप्याऽन्ते मोक्षं लभन्ति।




# श्रीवेङ्कटेश्वरवैभवम्

- डा एन्.उमादेवी
चरवाणी - ९९५१७३४४९४

लोके पवित्राणि क्षेत्राणि बहूनि सन्ति। एकैकस्मिन् काले एकैकस्य देवस्य अथवा क्षेत्रस्य महिमा नितराम् प्रशस्तिम् प्राप्नोति। तदुक्तं कृते वरदराजः त्रेतायाम् श्रीरामः द्वापरेश्रीकृष्णः यथा प्रामुख्यम् भजन्ते तथा कलियुगे श्रीवेङ्कटेश्वरः प्राधान्यं भजते। पापपरिहारकः अमृतैश्वर्य प्रदाता च श्रीवेङ्कटेश्वरः श्रीमहाविष्णोः अर्चावतारः इति परिकीर्त्यते। श्रीमद्रामानुजः तिरुमलक्षेत्रम् आगत्य सहस्रसंवत्सरेभ्यःपूर्वं वैखानस आगम शास्त्र संप्रदायानुसारेण पूजा व्यवस्थाम् निर्णीतवान्। स संप्रदायः अधुनापि तत्र निर्विघ्नम् प्रवर्तते। ब्रह्मणि श्रीनिवासे मम भक्ति रूपाशेमुषी प्रसरतु इति भगवद् रामानुजाचार्यः वेङ्कटेश्वरं परब्रह्मस्द्रूपिनं भावयामास।

वेदान्तदेशिकः तिरुमलक्षेत्रं आगत्य श्रीवेङ्कटेश्वरस्य दयाम् अष्टोत्तर शतसंख्यायैः पद्यैः स्तुतवान् तथैव दयाशतकम् इति प्रसिद्धमस्ति। वेङ्कटेश्वरस्य यद्यपि बहवः गुणाः सन्ति तथापि दयागुणस्यैव सर्वोत्कृष्टत्वं वेदान्तदेशिकैः प्रतिपादितम्। श्रीवेङ्कटेश्वरस्वामिनः घण्टावतारः इति देशिकस्वामि प्रसिद्धो बभूव। तथा च अस्मिन् कलियुगे श्री वेङ्कटेश्वरस्वामि साक्षात् परब्रह्मस्वरूपः इति प्रसिद्धम् प्राप।

ब्रह्मेन्द्रादि देवता गणेन सेवितपदं, योगीश्वरैः वन्दितं, नानारत्नविभूषणैः प्रकाशिततनुम्, बालसूर्यकोटिप्रभं, भक्तानां अखिलेष्टदं, कलियुग प्रत्यक्षदेवोत्तमं, कारुण्यामृतवारिराशिमनिशं श्रीवेङ्कटेशं भजे। हे श्री वेङ्कटेश तव अर्चामूर्तिं अवेक्षितुः मे मनसि सन्देहः अजनि। त्वं विष्णुः उताग्निजन्मा, आहोस्वित् पाञ्चारात्र वैखानसाद्यागमैः स्तुता परदेवता इति अद्य कृपया तव रूपतत्वं बोधय। हे वेङ्कटेश त्वां वेदार्थज्ञानिनः ब्रह्मेति विष्णुरिति शङ्कर इति पराशक्तिरिति अभेदात् वदन्ति। लोकस्य अन्तरात्मन् दमया क्षिप्रम् भवदीय तत् निजस्वरूपं दर्शय।

श्री वेङ्कटेश महनीय कटाक्षलेश श्रीनिर्मित, रक्षित, तिरस्कृत, समस्तलोक अन्यं शरणं न पश्यामि त्वां परम् आश्रये, संसारसागरे निमग्नं अद्य मां पाहि। त्वल्लीलाविनोदेनैव लोकाः जन्मस्थिति प्रलयरूपदशाः क्रमेण समाप्नुवन्ति। इन्द्र रविचन्द्रप्रमुखाः त्वदाज्ञां पालयन्ति श्री वेङ्कटेश सुदीनं मां परिपालय। उत्कृष्टानि नीचानि बहु प्रकाराणि दुरितानि गूढं यद्वाप्रकाशं भयं लज्जां च त्यक्त्वा करोमि। अद्य सर्वेन्द्रियैः अभिहतः निहतोऽस्मि, अत्र मनुजस्य इन्द्रिय पटुत्वं निहतम् इत्यर्थः। हे वेङ्कटेश विभो दयासमुद्र मां पाहि।

सर्वाणि पापकार्याणि मया आचरितानि, अहो अहं पुनरेव तानि कार्याणि कर्तुं सिद्धः भवान् तानि कार्याणि नाशयितुं समर्थः। एवं बहुकालं तव नाम स्तुत्वा अभिप्रवृत्तोहं हे वेङ्कटेश नूनं भक्त्या जितोऽस्मि। श्री वेङ्कटेशानुग्रहात् भक्तस्य पापपटलानि नष्टानि दूरीकृतानि इत्यर्थः। गङ्गानदीजले सिकतानां गणना कर्तुं शक्या, तथैव समुद्रजलसमूहानां न्यूनीकरणं तेषां गणना कर्तुं शक्या। हे वेङ्कटेश! त्वत्पादसेवनेन गतानां अखिल सङ्कटानां गणनं कर्तुं नैव शक्यं खलु।

श्री वेङ्कटेश! सर्वेश्वरस्य तव किं धनविषये वाञ्छास्ति, भक्त समूहस्य भक्ति गरिमाणं रक्षितुमेव वाञ्छास्ति। भक्तानां धनानि निर्दयतयेव स्वीकरोषि पुनरेव तेषां अधिकं द्रव्यं ददासि। मानवानां शिरोरुहचयाः (केश समूहाः) परम प्रियाः तान् सर्वान् परीक्षितुमेव केशसमूहं गृह्णासि। हे सप्तगिरीश्वर तान् आदाय भक्तितत्पराणां सर्वाणि अपि वाञ्छितानि भूयो ददासि। हे वेङ्कटेश! विमूढ चेताः अहं त्वदीयं सकल जगतः आधिपत्यं अभिवीक्ष्य बाल इव द्रव्यवस्त्वादिकं हि याचे। मम इहलोके यच्छुभकरं वस्तु निर्धार्य तत् दिव्यया कृपया प्रयच्छ। हे वेङ्कटेश तव पादपद्मयोः अनन्या भक्तिरेव मत्प्रार्थनां विना समस्त भूमण्डले वाञ्छितां भुक्तिं (भोजनादिकं) ददाति। मुक्तिं (तवसान्निध्यं) च प्रयच्छति। मह्यं अद्य कृपया तामेव भक्तिं प्रयच्छ। हे वेङ्कटेश द्रव्याणां समुपार्जनादिभिः अलम् (सन्तुष्टः), गार्हस्थ्य धर्मैः आचरितैः कार्यैः अलम्, बन्धूनां उपलालनादिभिः अलम् (अतिथिसत्कारादिभिः सन्तुष्टः) चित्तभ्रमोत्पादकैः श्रमकरैः न्यायशास्त्रमीमांसादि पठनैः अलम्, अद्य मम त्वत्पादसेवा एकैवास्ति गतिः।



आत्मज्ञानिनः यतीश्वराः यस्मात् परं न जानन्ति बहुप्रकारैः नामधेयैः समस्त जनैः यः सेव्यते, अस्मिन् भूमण्डले बहुस्वरूपैः यः दृश्यते, तं श्रीवेङ्कटेश्वरं सर्वदा शरणं प्रपद्ये।

हे वेङ्कटेश! त्वमेव शक्तिस्वरूपः त्वमेव शक्तिधरः खलु, त्वमेव शक्तेः सहोदर इति प्रसिद्धः। त्वमेव ब्रह्मरुद्रस्वरूपः, त्वमेव सर्वं त्वमेव मम शरणागतिः।

हे भगवन्! त्वं वेङ्कटेश्वरः यतः सेवमानानां विधेयः श्रीरामकृष्ण इति प्रसिद्धनामधेयः त्वत्पादभक्ति लव सङ्गत भागधेयः, हे कृपानिधे! यः एतत् स्तोत्रं पठति सोऽपि भाग्यशाली भवेत्। श्रीवेङ्कटेशस्य वैदिकसाहित्ये पुराणेषु च बहुधा प्रसिद्धिः वर्तते। श्री वेङ्कटेशः साक्षात् विष्णुस्वरूपः इति अस्माभिः ज्ञायते। श्री वेङ्कटेशस्य महिमा विशेषाः वेदमन्त्रेषु सात्विकपुराणेषु पुराणमूलकेषु अष्टोत्तर-सहस्रनामस्तोत्रेषु च बहुधा कीर्तिताः विराजन्ते।




- डा. माडुगुल अनिल् कुमार्
चरवाणी - ९६४०३२९५६५

‘‘सप्तगिरीश! वेङ्कटरमण गोविन्द! गोविन्द’’ इति श्रवणपेयं नाम कीर्तनं यत्र घुष्यते तत् तिरुमलक्षेत्रमेव। आन्ध्रप्रदेशे चित्तूरु मण्डले विद्यमान रमणीय सुवर्णमुखरीनद्यास्तीरे सप्तगिरयः विराजन्ते।

**अर्चावतारस्सर्वेषां बान्धवो भक्तवत्सलः।**
**अर्चावतारविषये मयाप्युद्देशतस्तथा।। भृगुसंहिता.३३.३४**

इति संहितोक्तरीत्या भक्तवत्सलः श्रीमन्नारायणः श्रीशेषाचले अर्चामूर्तिः प्रत्यक्षदेवश्च प्रादुर्भूय स्वभक्तान् परिपालयन् तोषयति। ‘‘कलौ वेङ्कट नायकः’’ इत्याभाणकः विद्यत एव किल। श्रीवेङ्कटेश्वरः कन्यामासे श्रवण नक्षत्रे सालग्राम शिलामूर्त्यात्मकं स्वयमाविर्भूय विराजते इति पुराणोक्तिः।

**वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।**
**वेङ्कटेश समो देवो न भूतो न भविष्यति।।**
**- श्रीवेङ्कटाचलमाहात्म्यम् ३७.४१**

इति च सुप्रसिद्धिरस्ति।

**ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्।**
**यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्।।**
**- श्री विष्णुपुराणम् ६.२.२७**

इति पुराणोक्तिः। अतः नामसङ्कीर्तनमात्रेणैव ब्रह्माण्डनायकः, स्वयम्भूः श्रीवेङ्कटेश्वरः सर्वानस्माननुगृह्णाति।

अर्चामूर्तिरयं भगवान् श्रीवेङ्कटेश्वरः अस्मिन् कलियुगे अत्र मौनमुद्रामाश्रित्य तिष्ठति। तथाऽपि अनुग्रहशक्तयस्सर्वाः तस्मिन् विलसन्ति। ‘‘अर्चात्मन्येव सर्वेषामधिकारो निरङ्कुशः’’ इत्यार्योक्तरीत्या अर्चारूपभगवतः सन्दर्शनाय भक्तानामवरोधः न विद्यते। तस्मात् भूलोकवासिनः भक्तास्सर्वे भगवन्तं श्रीवेङ्कटेश्वरं समाश्रित्य पूर्णमनोरथाः भवन्ति।

नियताह्लादजनकव्यापारः यः भवति सः उत्सवः। ‘‘उत्सूते आनन्दं इति उत्सवः’’ इति उत्सव शब्दस्य व्युत्पत्तिः। आनन्दं संवर्धतयतीत्यस्यार्थः। नवम शताब्दादारभ्य श्रीमद्वेङ्कटाचले विराजमानस्य श्रीवेङ्कटेश्वरस्य पुनः नित्योत्सव, पक्षोत्सव, मासोत्सव, संवत्सरोत्सवाः प्रचलन्तीति अत्रोपलब्धशासनैः ज्ञायते। उत्सवेषु विविध वाहनेषु विहरतः श्रीवेङ्कटेश्वरस्य अपरं नाम भवति श्री मलयप्प स्वामी इति।

कलियुगे श्रीनिवासाय श्रीवेङ्कटेश्वराय महाक्रतुमेकं समारब्धुं ब्रह्मणः बुद्धिरुत्पन्ना। तदनु सः विखनस, भृगु मरीच्यादि ब्रह्मर्षीन् ऋत्विग्वरानामन्त्र्य, तेषां साहाय्येन महाक्रतोः

सर्ववस्तूनि सज्जीकृत्य, कन्यामासे अथवा आशवयुजमासे शुक्लपक्षद्वितीया तिथौ विध्युक्तं साङ्गोपाङ्गं महाक्रतुमेनं प्रारम्भयामास। ब्रह्मोत्सवेषु भगवते श्रीनिवासाय निवेदयितुं विश्वकर्मा नवरत्नखचित आभरणानि, पीताम्बराणि, दिव्यमालाः, अनेक स्वादुरसफलानि, सुगन्धद्रव्याणि च सज्जीकृतवान्।

ब्रह्मोत्सवानां सन्दर्शनाय अङ्ग, वङ्ग, कलिङ्ग, काश्मीर, काम्भोज, विराट, केरळ, कुरु, पल्लव, पाण्ड्य, चोळ, मत्स्य, छेदि, सिन्धु, पाञ्चाल, सौवीर, सौराष्ट्र, महाराष्ट्र, टङ्कण, कोङ्कण, केकय, कोसल, कुन्तल, मगध, माळवादि राजानः आहूताः।

ब्रह्मोत्सवेषु श्रीनिवास सन्दर्शनाय विविधदेशेभ्यः समागताः राजानः अनेकानि अमूल्यानि उपायनानि भगवते निवेदयामासुः। ब्रह्मा एव स्वयं विश्वकर्माणमाहूय वाहनादीनि कारयित्वा उत्सवानारब्धत्वात् ब्रह्मोत्सवाः इति प्रसिद्धिरजायत।

भगवतः वाहनं गरुडदेवः एव दिक्पालकान्, वसुरुद्रादित्य, विश्व, अश्विनौ, मरुत्, यक्ष, असुर,सिद्ध, किन्नर, किंपुरुष, गन्धर्वगणान् सर्वानाह्वयामास। तदारभ्य ब्रह्मोत्सवेषु इन्द्राग्नियमनिर्ऋति, वरुण, वायु, कुबेर, ईशान दिक्पालकाः, आलयाधिदेवता प्रत्यधिदेवताश्च छत्रचामारादिभिरुपेतं ब्रह्माण्डनायकं भगवन्तं श्रीवेङ्कटेश्वरं सन्दद्दशुः। ते तु अदृश्ये एव भगवन्तं सेव्यन्ते। भगवानपि वीथीषु सञ्चरन् स्वभक्तानामार्तिं निवार्यते। ब्रह्मोत्सवेषु भगवतः श्रीवेङ्कटेश्वरस्य देहकान्तिः त्रिलोकीयान् मोहपरान् करोति।

एषु ब्रह्मोत्सवेषु भगवते ध्वजारोहणम्, मुक्ताशिबिका, सर्वभूपाल, हंस, सिंह, गरुड, गज, सूर्यप्रभा, चन्द्रप्रभा, हनूमत्, अश्व, हस्वशेष, बृहच्शेष वाहनानां सेवा क्रियते। एतेषु दिनेषु श्रीदेवी भूदेवी समेतः श्री मलयप्प स्वामी रथगजतुरगवाहनारुढस्सन् वीथीषु विहरति।

एवं ब्रह्मोत्सवमहाक्रतुः ब्रह्मोत्सवाः इति ख्यातिमुपलभ्य कन्यामासे श्रवण नक्षत्रे समाप्ताः भवन्ति। उत्सवान् ब्रह्मा आरब्धत्वात् शून्यं ह्स्वरथमेकमलङ्कृत्य भगवतः पुरतः प्रचालयिष्यन्ति। अस्यैव ब्रह्मरथः इति नाम भवति। ब्रह्मा उत्सवान् निर्वहतीति सङ्केताय ब्रह्मरथं भगवतः पुरतः प्रचाल्यते। कलियुगप्रत्यक्षदेवः श्री महाविष्णुरेव गोविन्द नाम्ना सुप्रसिद्धः।

**''नाहं वसामि वैकुण्ठे योगिनां हृदये न च।**
**मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद।।''**

इति प्राचीनोक्तिः। तदनुसारं भक्ताभीष्टप्रदायकः भगवान् श्रीवेङ्कटेश्वरः गोविन्द! गोविन्द! इति नाम सङ्कीर्तनपरायणानामनुग्रहार्थमत्र प्रादुर्भूय तिष्ठति। भगवद्भक्तः तोण्डमान् चक्रवर्ती कलियुगे ब्रह्मणः उपदेशानुसारं पुनः ब्रह्मोत्सवान् समारब्धवान्।

चान्द्रमानानुसारं वर्षत्रयेषु एकवारम् अधिकमासमागच्छति। चान्द्रमानं सौरमानापेक्षया ह्स्वं भवति। तस्मात् वर्षत्रयस्यैकवारं सौरमासारम्भः न जायते। अतः सूर्यसङ्क्रमणविहीनसस्यास्य मासस्य अधिकमासः इति नाम समजनि। एवं अधिकमास विद्यमानाब्दे यदि आश्वयुजः अधिकमासः भवति ब्रह्मोत्सवाः अधिकाश्वयुजमासे एकवारं, अनूचानेन निजाश्वयुजमासे नवरात्रिषु च एकवारं प्रचाल्यन्ते। अधिकमासे प्रचाल्यमान ब्रह्मोत्सवानां **''सालकट्ल ब्रह्मोत्सवाः''** इति, नवरात्रिषु प्रचाल्यमान ब्रह्मोत्सवानां ''वार्षिक ब्रह्मोत्सवाः'' इति च व्यवहारः सञ्जातः।

अस्मिन् संवत्सरे द्विवारं ब्रह्मोत्सवाः प्रचाल्यन्ते। सेप्टेम्बर् मासस्य १८ दिनाङ्के ब्रह्मोत्सवानां अङ्कुरार्पणं क्रियते।

सामान्यतः भक्तास्सर्वे प्रार्थनार्चनसन्दर्शनार्थं भगवतः समीपं यान्ति। किन्तु ब्रह्मोत्सवेषु भगवानेव स्वभक्तानां समीपमुपगम्य कामितार्थप्रदायकः भवति। शरणागतवत्सलस्य कृपासिन्धोः श्री मलयप्पस्वामिनः दिव्यमङ्गळरूपं समीपमायाति। श्रीवेङ्कटेश्वरस्वामिनं सन्दर्शयन्तः वयं सर्वे जन्मनि कृतार्थाः भवामः।





# भविष्योत्तरपुराणे
# ब्रह्मोत्सववर्णनम्





तस्मिन् महोत्सवे विष्णोः ध्वजारोहणवासरे।
प्रथमे प्रथमं यानं मनुष्यान्दोलिकाऽभवत्।

द्वितीयं च तथा रात्रौ - अभवच्छेषवाहनम्।
शेषे शयनशीलस्य शेषाचलनिवासिनः ।।

सदा शेषप्रियस्यास्य श्रीनिवासस्य शार्ङ्गिणः।
द्वितीयदिवसे चाद्यं भूयोऽभूच्छेषवाहनम्।।

द्वितीयं च तथा रात्रावभवद्धंसवाहनम्।

तृतीयदिवसे चाद्यमभवत्सिंहवाहनम्।
द्वितीयं च तथा यानं रात्रौ मौक्तिकमण्डपम्।।

पञ्चमे दिवसे चाद्यं यानमांदोलिकाऽभवत्।
हरेरमृतसन्धायि मोहिनीवेषधारिणः।।

द्वितीयं रजनौ यानं वेदवेद्यस्य वै हरेः।
बभूव च स्वयं साक्षात् छन्दोमूर्तिः खगेश्वरः।

आद्यं यानं षष्ठदिने हनूमानभद्धरेः
द्वितीयं मङ्गलगिरिः सायंयानमभूद्धरेः।।









महिषीसंयुतस्यास्य वसन्तोत्सवरागिणः।
तृतीयं रजनौ यानमासीदैरावतो गजः।

सप्तमेदिवसे यानमाद्यं भास्करमण्डलम्।
द्वितीयं मङ्गलगिरिस्सायमासीद्रमापतेः।।
रमणीयतमोद्यानविहारोत्सवरागिणः।
कुसुमापचयव्यग्रमहिषीजनशालिनः।
तृतीयं रजनौ यानमभवच्चन्द्रमण्डलम्।

अष्टमे दिवसे चाद्यमभवद्वाहनं हरेः।
नानाविधैरलङ्कारैर्मण्डितः सुमहान्रथः।

द्वितीयं रजनौ यानमभूदुच्चैश्श्रवाह्वयः।
नवमे दिवसे चाद्यं यानमान्दोलिकाऽभवत्।।

द्वितीयं मङ्गलगिरीः यानमासीद्रमापतेः।
हारिद्रैः पिङ्गलैः चूनैरभिषिक्तस्य मङ्गलैः।।



समुद्युक्तस्यावभृथस्नानमाङ्गलिकोत्सवे।
स इत्थं मङ्गलैश्चूर्णैर्हारिद्रैरभिषेचितः।।

सुन्दरम्मङ्गलगिरिं समारुह्य सतां गतः।
चैत्यं प्रदक्षिणीकृत्य सहसर्वैर्महाजनैः।।

जपद्भिर्वैदिकान् मन्त्रान् सहितश्च द्विजोत्तमैः।
चकारावभृथस्नानं भगवानादिपूरुषः।

स्वामिपुष्करिणीतीर्थे सर्वलोकैकपावने।
अवतारदिने तस्मिन् नक्षत्रे श्रवणे प्रगे।।

तृतीयं मङ्गलगियरिर्यानं रात्रावभूत्ततः।
ध्वजावरोहणाभिख्यः उत्सवोऽभूत्तदा हरेः।

ततोऽपरेद्युरभवत् पुष्पयागमहोत्सवः।
देशान्तरादागतानां सपर्याऽसीत्ततोनृणाम्।।



देवा जग्मुस्वकं धाम राजानो राजसत्तम।
जग्मुस्वनगरं दिव्यं दृष्ट्वा देवमहोत्सवम्।
ब्रह्मा जगाम स्वकं लोकं नत्वा वेङ्कटवल्लभम्।।





Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and
Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.

तिरुमलतिरुपतिदेवस्थानम्



तिरुमल
श्रीवेङ्कटेश्वरस्वामिनः
सालकट्ल
ब्रह्मोत्सवः
२०२० सेप्टेम्बर्
१९ तः २७ पर्यन्तम्

२६-०९-२०२० स्थिरवासरः
रात्रौ - अश्ववाहनम्

२७-०९-२०२०
भानुवासरः
रात्रौ - तिरुच्चि उत्सवः
ध्वजावरोहणम्







designpsivaprasad

